धर्मराजस्य चरणौ पीडयामास हृष्टवत् ॥ २१
तमुत्थाप्य महाराज धर्मपुत्रः प्रतापवान् ।
सस्वजे भरतश्रेष्ठमुपजिघ्रन्नुपस्पृशन् ॥ २२
नकुलः सहदेवश्च पाण्डवश्च वृकोदरः ।
अभिवाद्य महाराजमसजन्त स फल्गुनम् ॥ २३
धृष्टद्युम्नः शिखण्डी च पाण्डवानां च ये रथाः ।
वर्धयन्ते स राजानं निहते सूतनन्दने ॥ २४
ततः कृष्णो महाराज सात्यकिश्चापि सात्वतः ।
वर्धयन्ते स राजानं निहते सूतनन्दने ॥ २५
वासुदेवश्च कौन्तेयं प्रणयादिदमब्रवीत् ।
अद्य राजन्हताः सर्वे धार्तराष्ट्राः सराजकाः ।
हते वैकर्तने कर्णे रथानां प्रवरे रथे ॥ २६
यदि लोकास्त्रयः सर्वे योधयेयुः सवासवाः ।
तथापि दुर्जयः सूतस्तव कोपात्तु सूदितः ॥ २७
एवमुक्तः प्रत्युवाच धर्मराजो जनार्दनम् ॥ २८
तव प्रसादाद्गोविन्द हतः कर्णो महायशाः ।
पाण्डवाश्च जयं प्राप्ता नाशिताश्चापि शत्रवः ॥ २९
त्वं हि शक्तो भयात्त्रातुं यस्य कस्यचिदाहवे ।
समस्तस्य जगतो गोप्ता पाण्डवानां च सर्वदा ॥ ३०
त्वां समासाद्य शक्रोऽपि मोदते दिवि नित्यशः ।
त्वं पाता पाण्डुपुत्राणां यथैव जगतस्तथा ॥ ३१
अनाश्चर्यो जयस्तेषां भक्तिर्येषां त्वयि प्रभो ॥ ३२
त्वया नाथेन गोविन्द नाथवन्तो वयं युधि ।
यथेन्द्रेण पुरा देवास्त्वया चापि जनार्दन ॥ ३३
स्वप्स्याम्यद्य सुखं कृष्ण निद्रां लप्स्ये त्वहं क्षपाम् ।
विगतं हि भयं मेऽद्य त्वत्प्रसादान्न संशयः ॥ ३४
एवमुक्तस्तु पार्थेन केशवः प्राह पाण्डवम् ।
निमित्तमात्रं हि वयं तवाप्यस्मिन्मुदागमे ॥ ३५
यस्य ते भ्रातरः शूरा भीमसेनादयो नृप ।
संबन्धिनश्चेन्द्रवीर्याः पार्षतप्रमुखास्तथा ॥ ३६
अर्हते च भवान्नित्यं प्रियं नित्यं च मद्धितम् ।
प्रियो हि मे त्वमेतेन वचनेन नरोत्तम ॥ ३७
इत्युक्तो धर्मराजस्तु स्वरथं हेमभूषितम् ।
दन्तवर्णैर्हयैर्युक्तं कालवालैर्महीपतिः ॥ ३८
आस्थाय पुरुषव्याघ्रः स्वबलेनापि संवृतः ।
प्रययौ बहुवृत्तान्तं द्रष्टुमायोधनं प्रति ॥ ३९
संभाषमाणौ तौ वीर उभौ माधवपाण्डवौ ॥ ४०
स ददर्श रणे कर्णं शयानं पुरुषर्षभम् ।
गाण्डीवमुक्तैर्विशिखैः सर्वतः संनिपीडितम् ॥ ४१
सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ।
प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ ॥ ४२
अद्य राजाऽस्मि सर्वस्यां पृथिव्यां मधुसूदन ।
दिष्ट्या जयसि गोविन्द दिष्ट्या शत्रुर्निपातितः ४३
एवं सुबहुशो राजन्प्रशशंस जनार्दनम् ।
अर्जुनं च कुरुश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ४४
दृष्ट्वा च निहतं कर्णं सपुत्रं पार्थसायकैः ।
पुनर्जातमिवात्मानं मेने कुरुकुलोद्वहः ॥ ४५
समेत्य च कुरुश्रेष्ठं कुन्तीपुत्रं युधिष्ठिरम् ।
वर्धयन्ति स राजानो हर्षयुक्ता महारथाः ॥ ४६
सञ्जय उवाच ।
एवमेष क्षयो वृत्तः सुमहाल्लोमहर्षणः ।
तव दुर्मन्त्रिते राजन्दिष्ट्या त्वमनुशोचसि ॥ ४७
वैशंपायन उवाच ।
श्रुत्वैतदप्रियं राजा धृतराष्ट्रो महीपतिः ।
पपात भूमौ निश्चेष्टः कौरव्यः परमासनात् ।
तथा सत्यव्रता देवी गान्धारी दिव्यदर्शना ॥ ४८
ततस्तूर्णं तु विदुरस्तं नृपं सञ्जयस्तथा ।
पर्याश्वासयतां चैतावुभावेव तु भूमिपम् ॥ ४९
तथैवाश्वासयामासुर्गान्धारीं कुरुयोषितः ॥ ५०
स दैवं परमं मेने भवितव्यं च भारत ।
ताभ्यामाश्वासितो राजा तूष्णीमास्ते विशांपते ५१
एवमाख्याय राज्ञे च सञ्जयो राजसत्तम ।
जगाम शिबिरं भूयो हते कर्णे महात्मनि ॥ ५२
स दृष्ट्वा निहतं शल्यं राजानं च सुयोधनम् ।
शकुनिं सुबहूञ्राजन्सैनिकांश्च सहस्रशः ॥ ५३
तथैव पाण्डवीं सेनां निहतां प्रेक्ष्य सञ्जयः ।
सौप्तिके द्रौणिना राजन्हतवाजिनरद्विपाम् ॥ ५४

स हि दृष्ट्वा हतान्सर्वान्समन्ताद्युधि सञ्जयः ।
प्रयातो हास्तिनपुरं शोकार्तो भयविह्वलः ॥ ५५
हतेषु पुनरेतेषु प्रभूतगजवाजिषु ।
योधैश्च तैर्महाराज नानादेशसमुद्भवैः ॥ ५६
कुरुक्षेत्रं तु तत्सर्वं शून्यमासीद्विशांपते ।
निहतैः पाण्डवेयैश्च धार्तराष्ट्रैश्च संयुगे ॥ ५७
यथाहि विपर्यं वृत्तं धार्तराष्ट्रस्य संजयः ।
निवेदयति तत्सर्वं यथावृत्तं यथाविधि ॥ ५८

एवं महायुद्धमिदं महात्मनो
धनञ्जयस्याधिरथेश्च यः पठेत् ।
स सम्यगिष्टस्य मखस्य यत्फलं
तदाप्नुयाद्यः शृणुयाच्च नित्यशः ॥ ५९
मखो हि विष्णुर्भगवान्सनातनो
वदन्ति यं चाप्यनिलेन्दुभानवः ।
अतोऽनसूयुः शृणुयात्पठेच्च यः
स सर्वलोकांश्च जयेत्सुखी भवेत् ॥ ६०

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां कर्णपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

॥ कर्णपर्व समाप्तम् ॥ ८ ॥

---

अतः परं शल्यपर्व भविष्यति ।
तस्यायमाद्यः श्लोकः ॥
जनमेजय उवाच ।

एवं निपातिते कर्णे समरे सव्यसाचिना ।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥ १

इदं कर्णपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां
निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शाकाब्दाः १८२९ सन १९०७.

